वर्णनाप्रसङ्गे संवाहकस्य वृत्तान्तं कविना उपस्थापितम्। अस्मिन् प्रकरणे संवाहकः कश्चन धृतव्रतः सत्याश्रयी कर्मपरायणो धीरः पुरुषः चास्ति। अस्य प्रकरणस्य अष्टमेऽङ्के पुनः भिक्षोः संवाहकस्य उल्लेखः प्राप्यते। किञ्च कृतज्ञस्य नीतिपरायणस्य भिक्षोः संवाहकस्य विपत्तिकाले निर्णयकारणादेव प्रकरणस्य परिसमाप्तिः सुष्ठु सम्पन्ना भवति।

अस्मिन् शोधपत्रे मृच्छकटिकप्रकरणे वर्णितस्य बौद्धदर्शनस्य साहित्यशास्त्रीयं मूल्याङ्कनं तन्नैतिकशिक्षायाः विविधाः पक्षाश्च उपस्थाप्यन्ते।

## मृच्छकटिकस्य रचयिता तथा रचनाकालः–

मृच्छकटिकमित्यस्य प्रकरणस्य रचयिता राजा शूद्रकोऽस्तीति प्रकरणस्य भूमिकाभागे ज्ञायते। ततः ज्ञायते यत् राजा शूद्रकः क्षत्रियेषु श्रेष्ठतमः कविः बभूव[3]। सः शर्वप्रसादात् ऋग्वेदं सामवेदं गणितं वैशिकिं कलां हस्तिशिक्षां च ज्ञात्वा मृच्छकटिकमिति प्रकरणं व्यरचत्[4]। तत्रैव वर्ण्यते यत् शूद्रकः शतायुरभवत् तथा सोऽसौ कविः सततसमरव्यसनी, प्रमादशून्यः, मल्लयुद्धे पारङ्गमः क्षितिपालः च बभूव इति[5]।

वस्तुतः मृच्छकटिकस्य रचयिता शूद्रकः अस्ति न वेति विषये विद्वत्सु मतानैक्यं विद्यते। प्रथमे अङ्के शूद्रकस्य परिचयप्रदानकाले सर्वत्र लिट् लकारस्य यथा 'किल', 'चकार', 'बभूव' इत्येतादयः प्रयोगाः दृश्यन्ते। अपि च शूद्रकः शताब्दं यावदायुं प्राप्तवानिति कविपरिचयप्रदानकाले कथं कविना स्वयमुल्लिख्यते इति शङ्का उत्पन्ना भवति। बहुभिः पण्डितैः मन्यन्ते यत् शूद्रकः इति नामाभिधेयः कोऽपि कविः नासीदपि तु अन्येन केनापि कविना शूद्रकस्य नामोल्लेखं विधाय प्रकरणमिदं रचितमिति[6]।

स्कन्दपुराणे राज्ञः शूद्रकस्य उल्लेखः प्राप्यते। केचन प्रतिपादयन्ति यत् शूद्रकः वस्तुतः आन्ध्रदेशीयः राजा सिशुकः सिमुखो वा आसीदिति। अपरे चिन्तयन्ति यत् आभीरवंशस्य राज्ञः शिवदत्तस्य अपरं नाम शूद्रक असीदिति। वेतालपञ्चविंशतिरिति ग्रन्थे तथा कल्हणविरचिते राजतरङ्गिणी इत्यत्र इतिहासग्रन्थे, कथासरित्सागरे च शूद्रकस्य उल्लेखः प्राप्यते। आन्ध्रवंशस्य 'वासिष्ठिपुत्र-पुलमावि' इत्यस्य नामाभिधेयस्य राज्ञः अपरं नाम शूद्रक आसीदिति ज्ञायते। हर्षचरिते तथा कादम्बरी इति काव्ये च शूद्रकस्य उल्लेखः प्राप्यते।

---

3. एतत् कविः किल
   द्विरदेन्द्रगतिश्चकोरनेत्रः परिपूर्णेन्दुमुखः सुविग्रहश्च।
   द्विजमुख्यतमः कविर्बभूव प्रथितः शूद्रक इत्यगाधसत्त्वः ॥ मृ.क. 1।3
4. ऋग्वेदं सामवेदं गणितमथ कलां वैशिकीं हस्तिशिक्षां
   ज्ञात्वा शर्वप्रसादात् व्यपगततिमिरे चक्षुपी चोपलभ्य।
   राजानं वीक्ष्य पुत्रं परमसमुदयेनाश्वमेधेन चेष्ट्वा
   लब्ध्वा चायुः शताब्दं दशदिनसहितं शूद्रकोऽग्निं प्रविष्टः ॥ मृ.क. 1।4
5. समरव्यसनी प्रमादशून्यः ककुदो वेदविदां तपोधनश्च।
   परवारणबाहुयुद्धलुब्धः क्षितिपालः किल शूद्रको बभूव ॥ मृ.क. 1।5
6. दृष्टव्यम्आचार्य जगदीशचन्द्रमिश्रेण सम्पादितम् मृच्छकटिकम्, भूमिका पृ. 9 (चौखाम्बा सुरभारती प्रकाशनम् 1996)
7. तत्रैव, पृ. 9



पण्डितप्रवरस्य डा. पिशेलवर्यस्य मतानुसारं मृच्छकटिकस्य रचयिता दण्डी अस्तीति। 'त्रयी दण्डिप्रबन्धाश्च' इति कथनानुसारं तेन प्रतिपादितं यत् दण्डिनः तृतीया कृतिरस्ति मृच्छकटिकमिति प्रकरणम्[7]।

मृच्छकटिकमित्यस्य प्रकरणस्य मुख्यं प्रतिपाद्यं भवति चारुदत्तवसन्तसेनयोर्प्रेमवृत्तान्तमिति। इदं वृत्तं तु भासविरचितस्य 'दरिद्रचारुदत्तम्' इति नाटकस्य उपजीव्यं भवति। अत्र कविना नवीनकथानकस्य तथा नूतनपात्राणामुपस्थापनं विहितम्। मृच्छकटिकं तु मुख्यतः शृङ्गारपरकं प्रकरणमस्ति। क्रैस्ताब्दे पञ्चमशतके भारतीयसमाजस्य संरचना कीशी आसीदिति अस्य प्रकरणस्य पठनेन सम्यक् ज्ञायते। अस्य भाषाशैली तु विलक्षणा अस्ति। संस्कतभाषामतिरिच्य अत्र शौरसेनी, मागधी, प्राच्या, अवन्तिका प्रभृतीनां प्राकृतभाषाणां तथा शकारी, चाण्डाली तथा ढक्की प्रभृतीनां विभाषाणाम् उल्लेखः प्राप्यते[8]।

## भिक्षोः संवाहकस्य सामान्यपरिचयः–

शाक्यश्रमणव्रताचरणात्प्राक् भिक्षुः संवाहकरूपेण समाजे प्रतिष्ठितो जातः। सः स्थिरनिश्चयः सत्याश्रयी कर्मपरायणः कश्चन धीरः पुरुषः अस्ति। विपरीतकाले तस्य मतिः विभ्रान्ता न भवति। द्वितीये अङ्के वसन्तसेनया सह तस्य सम्भाषणप्रसङ्गे भिक्षोः संवाहकस्य व्यक्तित्वस्य परिचयं प्राप्यते। संवाहकः पूर्वं पाटलिपुत्रस्य कश्चन सभ्यो नागरिक आसीत्। भाग्यविपर्ययात् सः उज्जयिन्यां सम्प्राप्तः तथा संवाहनकलां ज्ञात्वा चारुदत्तस्य संवाहकरूपेण कार्यमकरोत्। भिक्षुः संवाहकः दैववादी नासीत् अतः भाग्यविपर्ययकारणात् सः निरुत्साहो न जातः अपि तु कर्मपारायणोऽभवत्। परन्तु दैवात् तस्य स्वामी चारुदत्तोऽपि निर्धनो जातः। तदनन्तरं संवाहनवृत्तिं परित्यज्य सः द्यूतक्रीडायां मग्नो जातः। अत्रावधेयमस्ति यत् द्यूतक्रीडायाम् उत्साहितस्य संवाहकस्य आत्मग्लानिः न भवति। एकदा सः द्यूतक्रीडायां पराजितोऽभवत्तथा दण्डाचरणभयात् ततः पलायितः। परन्तु माथुरः द्यूतकारः च तस्य अनुधावनं कुरुतः। तदानीं प्राणरक्षणाय सः वसन्तसेनायाः गेहमुपसर्पति। वसन्तसेना तदा स्वकीयानि स्वर्णाभूषणानि माथुराय द्यूतकाराय च प्रदाय संवाहकस्य प्राणरक्षां करोति। अनया घटनया संवाहकस्य मनसि आत्मग्लानिर्भवति तथा तस्य हृदयपरिवर्तनं भवति। सः प्रव्राजकव्रतं धृत्वा बौद्धश्रमणो भवष्यतीति निर्णयं कृतवान्। अयमेव बौद्धभिक्षुः प्रकरणस्य अन्तिमे भागे मरणापन्नायाः मूर्छितायाः वसन्तसेनायाः जीवनरक्षणं करोति।

अस्मिन् प्रकरणे रूपककारेण भिक्षोः चरित्रचित्रणं विशिष्टरूपेण विहितमस्ति। यदा द्यूतक्रीडायां पराजितः संवाहकः वसन्तसेनायाः शरणापन्नो जातः तदानीं स मिथ्याचारं नाचरति। सः वसन्तसेनायै सर्वं वृत्तान्तं यथावत् विवृणोति। अपि च सः वसन्तसेनायाः निकटे चारुदत्तस्य प्रशंसनं विदधाति। एवञ्च भिक्षुः संवाहकः कश्चित् कृतज्ञो जनः अस्ति। यदा वसन्तसेना अस्य प्राणरक्षां करोति तदानीं सः स्वकीयं कार्तज्ञ्यं प्रकटयितुं वसन्तसेनायाः परिजनजनान् संवाहनकलाम् अनुशिक्षयितुमैच्छत्[9]।

भिक्षुः संवाहकस्तु सदैव दृढप्रतिज्ञस्तथा कृतनिश्चयः अस्ति। वसन्तसेना तं निवारयति श्रमणव्रतधारणाय, परन्तु आत्मग्लानेः कारणात् सः तस्याः वचनं न शृणोत्यपि तु बौद्धभिक्षुकस्य जीवनं यापयति। सः बौद्धधर्मस्य नियमान् नैतिकसिद्धान्तान् श्रद्धया निश्चयेन निष्ठया च पालयति।

बौद्धभिक्षूणां कृते स्त्रीसंस्पर्शनं तु वर्जितमस्ति। भिक्षुः संवाहकोऽपि अस्य नियमस्य अनुपालनं सम्यक् रूपेण करोति। प्रकरणस्य अन्तिमे चरणे सः वसन्तसेनामुद्दिश्य गुल्मलतिकां निक्षिपति यस्याः साहाय्येन सा दण्डायमाना जाता। एवं प्रकारेण सः वसन्तसेनायाः जीवनरक्षणमपि करोति।

---

8. तत्रैव, पृ. 13
9. "संवाहकःआर्ये। यद्येवम्, तदियं कला परिजनहस्तगता क्रियताम्।" इति य मृ.क. (द्वितीयोऽङ्कः)

## मृच्छकटिके वर्णितानां बौद्धदर्शनस्य नैतिकधर्माणां विवेचनम्–

आर्यसत्यस्य ज्ञानम्, अष्टाङ्गिकमार्गस्य अनुपालनं, तत्त्वत्रयस्य अनुधावनमिति विविधान् बौद्धदर्शनगर्भितविषयान् प्रसङ्गानुगुणं कविः प्रकरणेऽस्मिन् उपस्थापयति। भिक्षोः संवाहकस्य उल्लेखः मुख्यरूपेण द्वितीये तथा अष्टमे अङ्के प्राप्यते। द्वितीये अङ्के द्यूतक्रीडायां पराजितस्य संवाहकस्य मञ्चे आविर्भावः भवति। त्रस्तः भीतः संवाहकः माथुरहस्तात् प्राणरक्षणार्थं जनविरले कस्मिंश्चित् देवालये देवस्य शरणं गच्छति। परन्तु धूर्तः माथुरः तं प्राप्नोति तथा तस्य ताडनं करोति। तदानीं दर्दुरकस्य साहाय्येन निष्क्रान्तः सः वसन्तसेनायाः गेहमुपसर्पति। अत्र वसन्तसेनया सह तस्य कथोपकथनसन्दर्भे संवाहकस्य नैतिकादर्शस्य परिचयः प्राप्यते। वसन्तसेना यदा संवाहकं धनिकस्य संज्ञां पृच्छति तदानीं सः कथयति–

**सत्कारधनः खलु सज्जनः कस्य न भवति चलाचलं धनम्।**
**यः पूजयितुमपि जानाति स पूजाविशेषमपि जानाति॥**[10] इति

अपि च सः अङ्गीकरोति यत्सः चारित्र्यविशेषे द्यूतोपजीवि सञ्जात इति। एवञ्च यदा वसन्तसेना प्रत्युपकारस्य भावनया विना तस्य साहाय्यं कृतवती तदानीं तस्य हृदयपरिवर्तनं जातम्। तदानीमेव सः निश्चयं कृतवान् बौद्धश्रमणरूपेण सः जीवनयापनं करिष्यतीति। वसन्तसेनामुद्दिश्य सः कथयति–".. अहमेतेन द्यूतकरापमानेन शाक्यश्रमणको भविष्यामि। तत् संवाहको द्यूतकरः शाक्यश्रमणकः संवृत इति स्मर्तव्यानि आर्यया एतानि अक्षराणि" इति। तदानीं कृतसङ्कल्पेन तेन भणितम्–

**द्यूतेन तत् कृतं मे यद्विहस्तं जनस्य सर्वस्य।**
**इदानीं प्रकटशीर्षो नरेन्द्रमार्गेण विहरिष्यामि॥**[11] इति

पुनः प्रकरणस्य अष्टमे अङ्के आर्द्रचीवरहस्तस्य भिक्षोः आविर्भावः भवति। अष्टमे अङ्के भिक्षुः कश्चन प्रवुद्धः शाक्यश्रमणकरूपेण आविर्भूतः भवति। तस्य वचनेन स्पष्टं ज्ञायते यत्सः सम्पूर्णरूपेण परिवर्तितो जातः इति। मञ्चे प्रविश्य सः सर्वप्रथमं सर्वानुद्दिश्य वदति–"अज्ञाः ! कुरुत धर्मसञ्चयम्" इति। बौद्धानां जीवनदर्शनं प्रकटयता भिक्षुणा भणितम्–

**संयच्छत निजोदरं नित्यं जागृत ध्यानपटहेन।**
**विषमा इन्द्रियचौरा हरन्ति चिरसञ्चितं धर्मम्॥**[12] इति

स्वजठरं स्वल्पभोजनादिना नियन्त्रणं कर्तव्यम्य ध्यानपटहेन अर्थात् अवधानरूपढक्कानादेन नित्यं जागरणं कर्तव्यम्य यतो हि विषमाः विषयग्रहणसाधनभूततस्कराः चिरसञ्चितं पुण्यकर्म हरन्ति इति श्लोकस्यार्थः। अत्र बौद्धशीलस्य तथा प्रज्ञायाः सिद्धान्तः कविना उपस्थाप्यते। अस्मिन्नेव प्रसङ्गे श्लोकद्वयस्य उल्लेखः भवति। किञ्च तेन भणितम्–

**पञ्चजना येन मारिताः स्त्रियं मारयित्वा ग्रामो रक्षितः।**
**अबलश्च चाण्डालो मारितः अवश्यमपि स नरः स्वर्गं गाहते॥**[13] इति

10. मृ. क. 2।15
11. मृ.क. 2।17
12. मृ.क. 8।1
13. मृ.क. 8।2



बौद्धदर्शनस्य गूढसिद्धान्तस्य प्रतिपादनमस्मिन् श्लोके प्रतिपाद्यते कविना। अस्य श्लोकस्य अन्वयार्थः एवं क्रियते–

'येन प्रबुद्धजनेन पञ्चजनाः (पञ्चज्ञानेन्द्रियानि) वशीकृताः, यः स्त्रियम् विषयोपभोगस्पृहावर्द्धिनीमविद्यां मारयित्वा स्वनियन्त्रणे कृत्वा य ग्रामः आत्मनिवासभूतं शरीरं रक्षितः परित्रातः य अबलः निर्बलः चाण्डालः अहङ्कारः कामो वा च पुनः मारितः विनाशितः, स नरः अवश्यं सुरलोकं गाहते गच्छति' इति।

अस्मिन्नेव प्रसङ्गे आदर्शभूतस्य श्रमणकस्य लक्षणं विवृणोति कविः–

**शिरो मुण्डितं तुण्डं मुण्डितं चित्तं न मुण्डितं किमर्थं मुण्डितम्।**
**यस्य पुनश्च चित्तं मुण्डितं साधु सुष्ठु शिरस्तस्य मुण्डितम्॥**[14] इति

केशानां तथा श्मश्रोः मुण्डनेन कोऽपि श्रमणको न भवति य अपि तु चित्तस्य यदा शुद्धिर्भवति तदानीमेव कश्चन साधुः भवति। अत्र शुद्धिपदेन वाह्यशुद्धिः नाभिधीयतेऽन्तःशुद्धिरेव तात्त्विकी शुद्धिरिति भावः।

भिक्षुः संवाहकः एतादृशानां तत्त्वसिद्धान्तानामनुपालनं स्वयं करोति स्म। अष्टमे अङ्के भिक्षु-शकारयोः संवादप्रसङ्गे जीर्णोद्याने शकारः परिव्राजकं संवाहकम् आक्रोशति तथा तं ताडयति च। परन्तु देहेन मनसा च अहिंसाधर्मस्य पालनं कुर्वन् भिक्षुः न क्रोधितः जातः। भिक्षोः दार्शनिकसिद्धान्तानां परिचयः अत्र प्राप्यते। प्रत्युपकारमतिः सः चिन्तयति यावत्पर्यन्तं वसन्तसेनायाः उपकारं न विदधाति तावत्पर्यन्तं तस्य स्वर्गाभिलाषः न भवेदिति[15]। वसन्तसेनां तत्र मूर्छितां प्राप्य सः सदेव तस्याः साहाय्यं करोति। अपि च वसन्तसेना यदा तस्य परिचयज्ञापने असमर्था अभवत् तदानीं सः अकपटमेव सर्वं पूर्ववृत्तान्तं तां संस्मारयति। अत्रावधेयमस्ति यत् भिक्षुः गणिकां वसन्तसेनां "बुद्धोपासिका" इत्याख्यया सम्बोधयति।

अस्य अङ्कस्य अन्तिमे श्लोके बौद्धधर्मस्य सारतत्त्वं भिक्षुकमुखात् कविना भणितं यथा–

**हस्तसंयतो मुखसंयत इन्द्रियसंयतः स खलु मानुषः।**
**किं करोति राजकुलं तस्य परलोको हस्ते निश्चलः॥** 8.47 इति

सः खलु मनुष्यत्वेन मान्यो भवति यः हस्तेन संयतः, मुखेन संयतः तथा इन्द्रियैः संयतः भवति। तथाविधस्य एव जनस्य परलोकः निश्चलः भवति।

अस्मिन् प्रकरणे भिक्षोः चरितस्य अध्ययनेन प्रतिभाति यत् सः बुद्धोपदिष्टस्य मध्यमप्रतिपदः सम्यक् अनुधावनं करोतीति। यद्यपि भिक्षोः संवाहकस्य उल्लेखः प्रकरणे बहुत्र नास्ति, तथापि संवाहकः भिक्षुः अस्मिन् प्रकरणे प्रमुखं स्थानं प्राप्नोति।

### उपसंहारः

मृच्छकटिकप्रकरणस्य अध्ययनेन प्रतिभाति यदस्मिन् प्रकरणे नियतिवादस्य प्रभावः सर्वत्र दृश्यते। समाजे हिन्दुधर्मावलम्बीनां जीवनशैली कीदृशी आसीत् तथा बौद्धधर्मस्य प्रभावः कीदृशः अभवदित्यपि सुष्ठु ज्ञायते।

14. मृ.क. 8।3
15. संवाहको भिक्षुः -" ... अथवा अलं ममैतेन स्वर्गेण। यावत्तस्या बुद्धोपासिकायाः प्रत्युपकारं न करोमि, यया दशानां सुवर्णकानां कृते द्यूतकराभ्यां निष्क्रीतः, ततः प्रभृति तया क्रीतमिवात्मानमवगच्छामि।" इति।

शूद्रकः बौद्धधर्मस्य प्रमुखान् सिद्धान्तान् अस्मिन् प्रकरणे सूक्ष्मरूपेण साहित्यिकशैल्या प्रतिपादितवानस्ति। भिक्षुकस्य आदर्शभूतं जीवनं कीदृशं भवेदिति विषयेऽपि अष्टमे अङ्के विशदेन वर्णनं विधीयते। अहिंसायाः आचरणं, प्रत्युपकारस्य चिन्तनं, शीलस्य अनुपालनमित्येतादृशाः विविधाः बौद्धदर्शनस्य सारगर्भितसिद्धान्ताः अत्र प्रतिपादिताः सन्तीति शम्।


सन्दर्भग्रन्थाः–

1. मृच्छकटिकम् (व्याख्याकारः–डा. जगदीशचन्द्रमिश्रः), चौखाम्बा सुरभारती प्रकाशनम्, वाराणसी,

2. Mrichchakatikam (World View Edition)

3. Two Plays of Ancient India by VUn BuitenUn

शोधप्रबन्धाः

The Little Clay Cart: The Construction of Gender and Emotion in Act V, "The Storm"

By Mohan R Limaye and Kim Price, Sahitya Akademi.


# 23

# बौद्ध-संस्कृत ग्रन्थों तथा पुराणों में सम्राट् अशोक


- सुखबीर सिंह शास्त्री

सहायकाचार्य

राजीव गान्धी-महाविद्यालय,

सहा-अम्बाला (हरियाणा)

एवम् अध्यापक शोधार्थी, रा.सं.सं., नई दिल्ली

दूरभाष–95412 03432

ई-मेल–sukhbir_alp@yahoo.com


सम्राट् अशोक न केवल भारतवर्ष के ही, अपितु सम्पूर्ण विश्वेतिहास के महानतम सम्राटों में अन्यतम विभूति है। यदि यह कहा जाये कि मौर्कस ओरलियस, सम्राट् शार्लमा, सिकन्दर महान् और अकबर के गुणों का समन्वित रूप भी सम्राट् अशोक की समकक्षता को प्राप्त नहीं कर सकता; तो इसमें कोई अतिश्योक्ति नहीं होगी। इस कारण से ही एच.जी. वेल्स महोदय ने अशोक महान् को अद्वितीय सम्राट् माना है। भारतीय साहित्य के अध्ययन से ज्ञात होता है कि अद्वितीय मानवीय-सेवा के कारण उन्हें प्रियदर्शी, अशोक, पिय्यदसि, अशोकवर्धन, मौर्यराज–इत्यादि नामों से पुकारा जाता है।

प्रियदर्शी सम्राट् अशोक का जीवन-चरित बहुत ही रोमांचक तथा अप्रत्याशित घटनाओं से परिपूर्ण है। क्योंकि सम्राट् अशोक अपने जीवन के पूर्वार्ध में अत्यन्त निर्दयी एवं क्रूर-दुर्दान्त शासक के रूप में प्रसिद्ध रहे तथा जीवन के अपरार्ध में अहिंसा के परमोपासक के रूप में जीवन व्यतीत किया। ऐसा परिवर्तन केवल और केवल विश्व के प्रकाश भगवान् बुद्ध के धर्म में दीक्षित होने के कारण ही सम्भव हो सकता।

अहिंसक नाम वाले माणवक से डाकू अंगुलिमाल बनने की कथा इतिहास-प्रसिद्ध है। वहीं डाकू 999 अंगुलियां की माला को धारण करने वाला डाकू अंगुलिमाल भगवान् बुद्ध के सम्पर्क में आने पर दया और करुणा की मूर्ति बन जाता है एवं अनुत्तर-अनुपम अर्हत्पद पर प्रतिष्ठित होता है। एक समय चारिका करते हुए, एक गर्भवती स्त्री की प्रसव पीड़ा को देखकर उसके मन में अपार करुणा जागृत होती है। वह उसकी पीड़ा से द्रवित हो उठता है तथा तथागत के समीप जाकर उसकी पीड़ा-मुक्ति के लिए याचना करने लगता है। तब तथागत उस स्त्री के लिए मंगल-मैत्री करने का निर्देश देते हैं। तथागत बुद्ध के निर्देश पर वह अपने सारे पुण्यों के प्रताप से उस स्त्री विरहितता की कामना करता है, जिससे उसकी प्रसव-पीड़ा कम होती है तथा उससे स्वस्थ बालक का जन्म होता है। इसी प्रकार सम्राट् अशोक के हृदय-परिवर्तन की घटना भगवान् बुद्ध के धम्म में ही सम्भव है।

भारतीय साहित्य विशेषतः संस्कृत-साहित्य इतिहास-लेखन की दृष्टि से नहीं लिखा गया। यही कारण है कि अनेक विषयों में आज भी हमें पर्याप्त जानकारियाँ उपलब्ध नहीं हो पायी हैं। अस्तु नाम, भारतीय इतिहास सम्पूर्ण भारतीय इतिहास साहित्य प्रपञ्च में यद्यपि सम्राट् अशोक विषयक सामग्री मात्रा में अल्पीयसि ही उपलब्ध होती हैं; तथापि सम्राट् अशोक के विषय में जानने के लिये इतिहासकार मुख्यतया चार सोपानों का आश्रय लेते हैं–

1. अशोक के अभिलेख,
2. पौराणिक संस्कृत साहित्य,
3. पालि-वंस साहित्य और
4. बौद्ध-संस्कृत साहित्य (मिश्र-संस्कृत-साहित्य)।

उक्त साक्ष्यों के आधार पर सम्राट् अशोक के विषय में इस प्रकार जानकारियाँ प्राप्त होती है–

## 1. अशोक के अभिलेख–

अशोक महान ने अपने धर्म के सिद्धान्तों एवं राजनैतिक-आदर्शों के लोक-ख्यापन हेतु अपने साम्राज्य के विभिन्न भागों में अभिलेख लिखवाये थे। ये अभिलेख तात्कालीन भारत के अथवा यों कहें कि मौर्य-साम्राज्य के चतुर्दिक स्थानों से प्राप्त हुये हैं। इनकी संख्या प्रायः 33 है। जिनमें अशोक के चौदह अभिलेख विशेषरूप प्रसिद्ध हैं। प्रियदर्शी अशोक-वर्धन के इन अभिलेखों को हम उसके बौद्धधर्म जीवन-नियामक आदर्शों एवं ऐतिहासिक तथ्यों का नवनीत रूप मान सकते हैं। सम्राट्-अशोक की मनोभावनाएँ कितनी पवित्र एवं उदात्त थी, ये उसके अभिलेखों में यत्र-तत्र सुगुम्फित है।

एक उदाहरण द्रष्टव्य है–

**"देवानं पिये पियदसि लाजा सवता इछति सवपासंड वसेतु। सवेहिते ते सयमं भावसुधि चा इछति। जाने चु उचावुच छन्दे उचादुचलागे। ते सवं एकदेसंपि कछंति। विपुले पि चु दाने असा नयि समये भावसुधि किटनाता दिडभतिता चा निचे वाडं।"**[1]

अशोक के अभिलेखों से यह स्पष्टतया सिद्ध होता है कि पर्यावरण-संरक्षण, शिल्प-कलाओं के विकास तथा अनेक विज्ञानों के संरक्षण एवं पोषण में सम्राट् अशोक की महती भूमिका सिद्ध हो चुकी है। चिकित्सा-विज्ञान के क्षेत्र में उसकी भूमिका प्रशंसनीय रही।

'उसने न केवल मानवों के हित में, अपितु पशुओं के हित-सुख के लिए भी औषधालयों की स्थापना की थी।' वस्तुतः भारतवर्ष में पशु-चिकित्सालय निर्माण का श्रेय सम्राट्-अशोक को ही जाता है।

इस प्रसंग में तो सम्राट् अशोक भवभूति के नायक मर्यादा-पुरुषोत्तम श्रीरामचन्द्र जी के वचनों का अनुसरण करते हुये प्रतीत होते हैं–

**स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।**
**आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥**[2]

1. चतुर्दश शिलालेख (कालसी) सप्तम लेख।
2. उत्तररामचरितम्, भवभूति





इसी सन्दर्भ में उपर्युक्त अभिलेख में ही सम्राट अशोक ने लिखवाया है–

**"सवता विजतसि देवानं पियस पियदसिसा लाजिने ये च अन्ता अथा चोडा पंडिया सातियपुतो केतलपुतो तंवपनि अन्तयोग नाम योनहाजा ये चा अन्ते तसा अंतियोगसा सामन्ता लाजानो सवता देवानं पियसा पियदसिसा लाजिने दुवे चिकिसका कटा मनसुचिकिसा पसुचिकिसा चा आसेधीनि मनुसापेगानि चा पसापेमानि चा अतता तथि सवता हालापिता चा लोपापिता चा एवमेवा मुलानि चा फलानि चा अतता तथि सवता हालपिता एवमेवा मुलानि चा फलानि चा अतता तथि सवता हालापिता चा लोपापिता चा। मगसे लुखानि लोपितानि उदुयानानि खानापितानि पटिभोगाये पसुमुनिसानं।"**[3]

## 2. पौराणिक संस्कृत साहित्य–

**पुराणों में सम्राट् अशोक के विषय में उपलब्ध वर्णन–**

संस्कृत में लिखित पुराण-साहित्य में अनेक सम्राटों तथा महापुरुषों का वर्णन प्राप्त होता है। इसी तारतम्य में पौराणिक ग्रन्थों में सम्राट अशोक विषयक विभिन्न तथ्यों का ज्ञान प्राप्त होता है। सम्राट् अशोक के सिंहासनारूढ़ होने से पूर्व बिन्दुसार ने 25 वर्षों तक शासन किया था–

**भविता नन्दसारस्तु पञ्चविंशत् समा नृपः।**[4]

पौराणिक सामग्री और ऐतिहासिक स्रोतों में बहुत अनेक साम्य तथा तारतम्यता प्राप्त होती हैं। सम्राट अशोक के अभिलेखों में वर्णित बहुत सारे स्थल पुराणों में निर्दिष्ट नामों से प्रकारान्तर से सिद्ध होते हैं।

यथा–साहबाजगढी अभिलेख में निर्दिष्ट तथ्य महाभारत के एक श्लोक से सिद्ध हो जाता है। महाभारत में वर्णित है कि–

**'कर्णं राजपुरं गत्वा कम्बोजा निर्जितास्तथा।'**[5]

ब्रह्म-पुराण में सम्राट् अशोक द्वारा आख्यायित 'नाभिकपुर' का वर्णन मिलता है। इसी तरह वायुपुराण में पुलिन्दों का निवास-स्थल 'विन्ध्याचल' बताया गया हैं। इस अभिलेखीय वाक्य को निर्दिष्ट करता है–

**पुलिन्दा विन्ध्यमलिका वैदर्भा दण्डकैः सह।**[6]

युगपुराण में मौर्य-साम्राज्य के विषय में अनेक महत्त्वपूर्ण तथा मूल्यवान् जानकारियाँ प्राप्त होती हैं। मौर्य सम्राट् अशोक की राजधानी पाटलिपुत्र (पटना) की नगर-व्यवस्था वर्णन युगपुराण में इस प्रकार मिलता है–

**ततः पुष्पपुरे प्राप्ते प्रथिते हिते।**[7]

3. चतुर्दश शिलालेख (कालसी) द्वितीय आलेख
4. वायुपुराण 99/332
5. महाभारत
6. वायुपुराण 55/126
7. गार्गी संहिता (युगपुराण, 17)

इसके अतिरिक्त ब्रह्माण्ड-पुराण और वायु-पुराण में अशोक के सम्राट् के सुपुष्ट प्रमाण प्राप्त होते हैं। उनके विषय में जानकारी इस प्रकार से प्राप्त होती है–

**चतुर्विंशत् समा राजा चन्द्रगुप्तो भविष्यति।**
**भविता भद्रसारस्तु पञ्चविंशत् समा नृपः॥**
**षट्त्रिंशत् तु समा राजा अशोको भविता नृषु॥**[8]

अशोक ने मौर्यसाम्राज्य का शासन 36 वर्षों तक किया था उसके पश्चात् अशोक के उत्तराध्किारियो ने मगध्साम्राज्य पर शासन किया था–

**षट्त्रिंशत् तु समा राजा अशोको भविता नृषु॥**
**तस्य पुत्रः कुनालस्तु वर्षाण्यष्टौ भविष्यति।**
**कुनालसूनुरष्टौ च भोक्ता वै बन्धुपालितः॥**

**बन्धुपालितदायादो दश भावीन्द्रपालितः।**
**भविता सप्तवर्षाणि देववर्मा नृपाधिपः॥**

**राजा शतधनुश्चाष्टौ तस्य पुत्रो भविष्यति।**
**बृहद्रथश्च वर्षाणि सप्त वै भविता नृपः॥**

**इत्येते नव मौर्या वै भोक्ष्यन्ति च वसुन्धराम्।**[9]

यदि उपर्युक्त पौराणिक अनुश्रुति को सत्य माने तो ज्ञात होता है कि अशोक एवं उसके उत्तराधिकारियों ने लगभग 137 वर्षों तक भारतवर्ष पर राज्य किया।

यहाँ प्रसङ्गवशात् ये भी समझना अनिवार्य हो जाता है कि ब्रह्माण्ड-पुराण एवं वायु-पुराण ने नौ मौर्य-सम्राटों की सत्ता स्वीकार की गई है, किन्तु मत्स्य-पुराण एवं विष्णु-पुराण में यह संख्या दस हो जाती है।[10]

पुराणों में मौर्यवंशीय सम्राटों का क्रमिक वर्णन प्राप्त होता है, किन्तु ब्राह्मणेत्तर वर्ण एवं क्षत्रियेत्तर होने के कारण पुराणों में अशोक महान् का उतना महिमा-मण्डन नहीं किया गया है जैसा कि बौद्ध-संस्कृत साहित्य में उसकी महत्ता दिखाई पड़ती है।

### 3. पालि-वंस साहित्य–

पालि-भाषा में सुमहत् वंस-साहित्य की प्राप्ति होती है। यह साहित्य विशेष रूप से इतिहास लेखन के क्रम में लिखा गया है। पालि-साहित्य के अन्तर्गत श्रीलंका में विरचित दीपवंस तथा महावंस ग्रन्थों से सम्राट् अशोक के जीवन की विशेष झांकी प्राप्त होती है।

### 4. बौद्ध-संस्कृत साहित्य (मिश्र-संस्कृत-साहित्य)–

बौद्धसाहित्य में सम्राट् अशोक का अत्यधिक सम्मानजनक स्थान है। बौद्धसाहित्य में सम्राट् अशोक का अत्यधिक सम्मानजनक स्थान है। बौद्ध संस्कृत-साहित्य के द्वारा ही हम सम्राट् अशोक के विषय में

8. ब्रह्माण्ड 74/144-45 एवं वायुपुराण 99/331-32
9. ब्रह्माण्ड-पुराण 74/144-149, वायुपुराण 99/331-336
10. मत्स्य पुराण272/22-26 तथा विष्णुपुराणअध्याय24



पूर्णता से ज्ञान प्राप्त कर सकते हैं। अशोक विषयक सामग्री से ओत-प्रोत अवदान साहित्य बौद्ध संस्कृत-साहित्य का आधरभूत तत्त्व है। दिव्यावदान नामक ग्रन्थ में अशोक के जीवन के घटना-क्रमों का सूक्ष्म एवं सटीक वर्णन उपलब्ध होता है, किन्तु कुछ इतिहासकारों के मत में अवदान साहित्य के वर्णनों को कपोल-कल्पना और नितान्त अतिरंजना माना गया है।[11]

फिर भी अशोक महान् के जीवन को व्याख्यायित करने वाले मुख्य दिव्यावदान के अंगभूत ग्रन्थ-रत्न (अवदान संख्या–26, 27, 28 एवं 29) निम्नवत् हैं–

1. **पांशुप्रदानावदानम्**
2. **वीतशोकावदानम्**
3. **कुणालावदानम्**
4. **अशोकावदानम्**

अवदान साहित्य में अशोक का जीवन-चरित एक बहु आयामी व्यक्तित्त्व के रूप में प्रस्फुटित हुआ है। जो सम्राट् अशोक अति महत्त्वाकांक्षा से ग्रस्त होकर कलिंग युद्ध के भीषण रक्तपात का कारण बनता है वही भगवान् बुद्ध के द्वारा प्रवर्तित अष्टाङ्गिक-मार्ग का अनुसरण करते हुये वीतरागी और परम अहिंसक जीवमात्र का उद्धारक बन जाता है तथा सत्य-मार्ग पर आजीवन चलता है। इस दौरान वह बौद्ध-तीर्थों की यात्रा पर निकल पड़ता है–

**यदा मया शत्रुगणान्निहत्य प्राप्ता समुद्राभरणा सशैल।**
**एकातपत्रा पृथिवी तदा मे प्रीतिर्न सा या स्थविरंनिरीक्ष्य॥**
**त्वद्दर्शनान्मे द्विगुणः प्रसारः सञ्जायतेक्रस्मिन् वरशासनाग्रे।**
**त्वद्दर्शनाच्चैव परोक्रपि शुद्ध्याद्वन्टो मयाथाप्रतिमः स्वयम्भूः॥12**

वस्तुतः बौद्ध संस्कृत-ग्रन्थों के अनुशीलन से ही यह तथ्य ज्ञात होता है कि जो अशोक कलिंग युद्ध के भीषण रक्त-पात का कारण बना वह कैसे शस्त्र-विजय को त्यागकर शास्त्र-विजय अथवा धर्म-विजय के लिये निकल पडा?

अशोक द्वारा बौद्ध-संगीति का आयोजन, संघ के प्रति समर्पण, 84, 000 स्तूपों का निर्माण, बौद्ध-तीर्थों की यात्राओं का वर्णन हमें बौद्ध संस्कृत-साहित्य के द्वारा ही होता है।[13] इस प्रकार हम कह सकते हैं कि सम्राट् अशोक विषयक तथ्यों के परिशीलन हेतु हमें बौद्ध ससंकृत-साहित्य रूपी रत्नाकर का अवगाहन करना ही होगा, जिससे 'नवनवोन्मेषशालिनी प्रज्ञा' का चमत्कृत रूप सुधीजनों के समक्ष प्रकट हो सके।

सम्राट् अशोक के जीवन और कर्तृत्व के विषय में तिब्बती और चीनी इत्यादि भाषाओं में भी सूत्र अवश्य प्राप्त होते हैं। श्रीलंका, वर्मा, थाइलैण्ड, जापान, मंगोलिया इत्यादि देशों में भगवान् बुद्ध के इस अनन्य अनुयायी की उसकी मानववादी शिक्षाओं के प्रचार तथा अद्वितीय मानवीय-सेवा के लिए पूजा-आराधना होती है।

11. नन्द मौर्ययुगीन भारतपृ. 6/242, डॉ. के.ए. नीलकण्ठ शास्त्री
12. दिव्यावदान पृ. 38
13. दिव्यावदानम्, पृ.-405

# 24

# महाबोधिद्रुमविजयस्य ऐतिहासिकः सन्देशः

पङ्कजः
साहित्याचार्यप्रथमवर्षच्छात्रः
श्रीरघुनाथकीर्तिपरिसरः,
देवप्रयागः (उत्तराखण्डः)

भारतदेशस्य इतिहासः अत्यन्तं प्राचीनः वर्तते। यतोहि अस्य देशस्य संस्कृतिः अत्यन्तं प्राचीना वर्तते। इतिहासस्य संस्कृतेश्च पारस्परिकः सम्बन्धो भवति। भारतदेशस्य संस्कृतिः अत्यन्तम् उन्नता विकसिता च आसीत्। तस्माद् अयं च इतिहासः अत्यन्तं गौरवमयः आसीत्। दुर्भाग्यात् इतिहासस्य ज्ञानार्थं स्रोतसामग्र्यः अल्पाः एव सन्ति। प्रायः इतिहासज्ञानार्थं स्रोतःसामग्रीरूपेण अभिलेखानां पुरातात्त्विकसामग्रीणां च प्रयोगः क्रियते। एतन्मध्ये तात्कालिकसाहित्यमपि स्रोतःसामग्र्याः कार्यं करोति। भारतीयेतिहासः ज्ञातव्यश्चेत् अत्र प्राचीनाः भारतीयाः भाषाः विशेषमुल्लेखमर्हन्ति। अत्रापि पालि-प्राकृत-संस्कृतभाषाः महत्त्वपूर्णाः सन्ति इतिहासज्ञानार्थम्। दुर्भाग्यात् पालि-प्राकृतयोः भाषयोः अपेक्षया संस्कृते इतिहासः न्यूनः एव विद्यते। अस्मिन् साहित्ये यत् पाऽराणिकं साहित्यं लभ्यते, तदपि इतिहासनाम्ना अस्माभिः व्यवह्रियते। किन्तु तथा न भवतिकाव्यं भिन्नवस्तुजातं वर्तते इतिहासश्च भिन्नो विषयः। कल्पितकाव्यं कदापि इतिहासः भवितुं नार्हति।

भारतदेशस्य सन्दर्भे पश्यामश्चेत् इतिहासस्तु समेषां भवति, किन्तु केषाञ्चित् प्राप्यते, अन्येषां विलुप्तं च भवति। तदपि भुवि मुख्यं स्थानं इतिहास एव भजते। प्राचीनकाले राजतरंगिणी-सदृशानि काव्यानि लिखितानि अभवन्, येषाम् आश्रयेण अद्य इतिहासकाराः इतिहासस्य विषये ज्ञातुं प्रभवन्ति। तथैव चरितकाव्यानि अपि कदाचित् इतिहासस्य स्रोतःसामग्रीरूपेण कार्यं कुर्वन्ति। बुद्धचरितं सौन्दरनन्दं प्रभृतिकाव्यानि भगवतो बुद्धस्य बौद्धधर्मस्य च विषये पर्याप्ताम् इतिहाससामग्रीम् अस्माकं दृक्पथमानयन्ति। संस्कृते एतादृशानि नैकानि काव्यानि सन्ति। तत्र पालिभाषायां तु वंससाहित्यं प्रामुख्येन इतिहासस्य एव [illegible] करोति। महावंस-दीपवंसयोः प्रभुता इतिहाससामग्री विद्यते।

आधुनिकसंस्कृतसाहित्ये डॉ. प्रफुल्लगडपालविरचितं खण्डकाव्यं महाबोधिद्रुमविजयम् इतिहासग्रन्थश्च आगच्छति। ग्रन्थोऽयम् ऐतिहासिकघटनानाम् उपस्थानं करोति।

खण्डकाव्येषु प्रमुखं स्थानं कालिदासप्रणीतस्य मेघदूतस्य वर्त्तते। तस्मिन् मेघदूते पूर्वमेघः उत्तरमेघश्च भागद्वयं प्राप्यते। तथाऽत्र अस्मिन् महाबोधिद्रुमविजय-खण्डकाव्येऽपि भागद्वयमस्ति। कस्यापि ग्रन्थस्य मुख्यभागो भवति मुखपृष्ठम्। ग्रन्थस्य मुखपृष्ठमाकर्षकं स्यादिति विदुषामाशयः। ये कलाकोविदाः सन्ति, कलाविज्ञाः सन्ति, कलापरीक्षकाः सन्ति–तेषामिदम् अभिमतं यत् मुखपृष्ठं सर्वदा आकर्षकं भवेदिति।



मुखपृष्ठं दृष्ट्वा सहृदयानां पाठकानां मनः तत्र अवश्यं रमते। तद्दृष्ट्या अस्य खण्डकाव्यस्य मुखपृष्ठमपि आकर्षकमस्ति।[1] अस्मिन् मुखपृष्ठे भगवतो बुद्धस्य सम्बोधिप्राप्तिकालस्य चित्रं विलसति। भगवान् बुद्धः ग्रन्थस्य वर्ण्य-विषयस्य महाबोधिद्रुमस्य अधः उपविश्य ध्यान-साधनायां लीनो दृश्यते। पृष्ठभागात् चन्द्रमसः प्रकाशः मन्द-मन्दमागच्छति।

अस्मिन् विषये किञ्चिद् विचारयामः–

मुखपृष्ठे भगवतो बुद्धस्य यत् छायाचित्रं दृश्यते। तत्र बुद्धः यस्य वृक्षस्य तले उपविष्टः दृश्यते। तस्मिन् विषये अत्र प्रश्नः उदेति भगवतो बुद्धस्य सम्बन्धः केन वृक्षेण वर्त्तते। अस्योत्तरं प्रायः सर्वेऽपि जानन्ति–बोधिवृक्षेण बुद्धस्य सम्बन्धः। अस्य मुखपृष्टदर्शनेन अत्र एतद् प्रमाणीभवति यत्–अस्मिन् खण्डकाव्ये वृक्षस्य कथा वर्णिताऽस्ति। अतः प्रथमं सोपानं प्रशंसनीयमस्ति। एवमेव ग्रन्थस्य पृष्ठभागे लेखकपरिचयः प्राप्यते। तत्र सर्वतः आकर्षकमस्ति लेखकस्य छायाचित्रम्। कीदृशं छायाचित्रमिति विचारणीयम्–लेखकः बौद्धधर्मस्य विहारस्य पुरस्तात् दृश्यते, निश्चयेन स्थानमेतद् बोधगयास्थितं बौद्धकेन्द्रं वर्तते। अयमेव विहारः महाबोधि-विहारः कथ्यते साम्प्रतम्, पुरा अपि अनेनैव नाम्ना अस्य व्यवहारो जायते स्म।

कविना ग्रन्थे सर्वादौ पालिभाषया महाबोधिवृक्षस्य वन्दनं विहितम्। इदं च वन्दनम् अनेन पालिवन्दनाग्रन्थात् स्वीकृतं वर्तते। इयं गाथा पालिसाहित्ये अतीव प्रसिद्धा वर्तते।

तथागतः बुद्धः न कस्यचित् गुरोः ज्ञानेन बुद्धो जातः। कस्यचित् वाग्मिनः उपदेशेन तस्य ज्ञानं नैव जागृतम्। सः स्वयं जागृतो जातः। स्व-परिश्रमेण, स्वस्य पारमिताभिः स्वस्य पुण्यार्जनेन...। परञ्च यदा सः सम्बोधिं प्राप्तवान्, तदा तन्मनसि आश्रयीभूतस्य तस्य वृक्षस्य विषये श्रद्धा जागृता अभवत्। स च तदा तत्र तं महावृक्षं वन्दते। तस्मिन् विषये इयं गाथा गीता वर्तते, पालिस्तव-साहित्ये–

**यस्स मूले निसिन्नो व सब्बारिं विजयं अका,**
**पत्तो सब्बञ्ञूतं सत्था वन्दे तं बोधिपादपं।**

**इमे हेते महाबोधिं लोकनाथेन पूजिता,**
**अहंपि ते नमस्सामि बोधिराजा नमत्थु ते॥**[2]

अस्याः गाथायाः अयं भावार्थः–

'यस्य वृक्षस्य अधः उपविश्य भगवता बुद्धेन चित्तस्य संस्काररूपिण्यां मारसेनायां विजयः प्राप्तः आसीत्। तदनन्तरं च सः शास्ता जातः, बुद्धः सञ्जातः। तं बोधिपादपम् अहं नमामि। अयं च बोधिवृक्षः सः एव वर्तते, यः सर्वज्ञेन बुद्धेन बोधिप्राप्त्यन्तरं पूजितो जातः। अहम् अपि तं बोधिराजं महावृक्षं नमामि। हे बोधिराज! ते नमोऽस्तु इति।'

इत्येवं तस्मिन् पुरातने स्तवे अयं महाबोधिद्रुमविजयकारः अपि महाबोधिद्रुमं प्रति स्वस्य स्तुतिं प्रस्तौति–नूनम् अयम् अस्य काव्यस्य किञ्चन विनूतनः प्रयोगः वर्तते।

तदनन्तरम् आयाति समर्पणस्य विषयः। महाबोधिद्रुमकारः डॉ. प्रफुल्लगडपालः ग्रन्थं कस्मै समर्पयतीति जिज्ञासायां सत्यां कथ्यते अग्रे।

---

1. मुखपृष्ठम्महाबोधिद्रुमविजयम्
2. महाबोधिवृक्षवन्दनम्महाबोधिद्रुमविजयम्

अस्मिन् विषये कविः वक्ति-

सप्तदश्यां तिथौ मासि सितम्बरे मिते ध्रुवम्।
त्रयोदशोत्तरे काले खिष्टाब्दे द्विसहस्रके॥

धर्मपालजयन्त्यां च शुभेऽह्नि शुभे मते।
काव्यं शुभं मयारब्धं महाबोधिद्रुमस्मृतौ॥

समर्प्यते मयेदं वै तस्मै सद्धर्मदर्शिने।
अर्हते धर्मपालाय सौगताय वराय च॥[3]

*(अर्थात् 17 सितम्बर, 2013 को अनागारिक धर्मपाल जयन्ती के अवसर पर सम्पूर्ण विश्व में अत्यन्त शुभ माने गये इस मंगलकारी दिवस पर उनके मंगल-मय कर्मों से पुनः पल्लवित महाबोधिवृक्ष की पावन स्मृति में मैंने इस शुभ काव्य का आरम्भ किया।*

*इस काव्य को मैं सद्धर्म के उसी महान् दृष्टा, अर्हत्, सौगतिक (बुद्ध-पुत्र) तथा विश्व की महान् विभूति अनागारिक धम्मपाल को ही सादर समर्पित करता हूँ।)*

एतदनन्तरं प्रकाशकीयं प्रकाशितमस्ति, यत्र शान्तिस्वरूपबौद्धस्य विचाराः उल्लिखिताः वर्तन्ते।

एवमेव ग्रन्थस्य भूमिकायामपि ऐतिहासिकानि तथ्यानि अस्माकं पुरस्तात् प्रस्तौति स्वयं कविः। भूमिकायाः प्रारम्भे कवेः कवित्वं दृष्टिपथमायाति। तत्र च उल्लेखः दृश्यते–

*"7 जुलाई, 2013! एक काला दिवस! भारत के बिहार प्रान्त के विश्व-प्रसिद्ध महाबोधि महाविहार तथा महाबोधि महावृक्ष के समीप 9 सीरियल बम ब्लास्ट! एक आतंकी हमला! महाबोधि महावृक्ष की कुछ शाखाओं को ही हानि, किन्तु विश्व के करोड़ों लोगों के दिलों पर नश्तर की चोट! भारत की शान्तिपूर्ण देश की छवि को करारा झटका! महाकरुणा के स्रोत के साये में हृदय विदारक विस्फोट!"[4]*

कविना त्रिंशदधिकपृष्ठेषु भूमिकायां यथार्थतत्त्वानां वर्णनं कृतम्, येन बौद्धधर्मस्य मुख्यकेन्द्रस्य बोधिद्रुमस्य कथावस्तु समेषां पुरस्तादुपस्थितं भवति। ग्रन्थेऽस्मिन् 285 श्लोकाः प्राप्यन्ते। श्लोकद्वयं वसन्ततिलकायाम् अन्ये समेऽपि श्लोकाः अनुष्टुप्-छन्दसि वर्त्तन्ते।

कविः गडपालः ग्रन्थस्य मङ्गलाचरणे बुद्धस्य स्मरणं करोति–

**बुद्धं नमामि सर्वज्ञं शुभां बुद्धपरम्पराम्।
महाबोधिद्रुमं दिव्यं गयाभूमिं महत्तराम्॥**[5]

अनेन मङ्गलाचरणेन ग्रन्थकारः बुद्धं, बुद्धपरम्परां, महाबोधिद्रुमं बोधगयाभूमिं च युगपदेव प्रणमति। ततः परं ग्रन्थेऽस्मिन् बौद्धपरम्परा-प्रख्यापनम् प्राप्यते। तद्यथा–

**सुसमृद्धा सुदीर्घा च महतीयं परम्परा।
सुगतवचनैर्युक्ता त्रात्री वैतानिकी सदा॥**[6]

3. समर्पणम्महाबोधिद्रुमविजयम्
4. भूमिकामहाबोधिद्रुमविजयम्
5. मङ्गलाचरणम्महाबोधिद्रुमविजयम्
6. महाबोधिद्रुमविजयम्1.2



इतः परं बुद्धशिक्षोपस्थापनं ग्रन्थे प्राप्यते यत्र कविः वक्ति-

**त्रिकालज्ञस्स सम्बुद्धः कारुणिकस्तथागतः।
पाठयामास शीलानि शुभङ्कराणि पञ्च वै॥
आष्टाङ्गिकस्तथा मार्गो लोके तेन च देशितः।
वहन्ति जीवनं सम्यक् तदाचरणतो जनाः॥**[7]

एवमेव तदनन्तरं सम्बोधिप्रकरणं ग्रन्थेऽस्मिन् प्राप्यते। तद्यथा–

**उरुविल्वे प्रसिद्धो हि सुरम्ये च वने रणे।
बोधिद्रुमे पवित्रे च बुद्धो ज्ञानोदयो महान्॥**[8]

पुनः आधुनिककाले बोधिवृक्षः कुत्रास्ति तस्मिन् विषये-

**आधुनिके विहारे च गयाक्षेत्रे सुमण्डले।
नैरञ्जरानदीतीरे सुरम्ये भाति भूपदः॥**

अयं ग्रन्थः महाबोधिद्रुमस्य सम्पूर्णम् ऐतिह्यं प्रस्तौति। अस्मिन् ग्रन्थे चीनीयात्रिकस्य ह्वेनसाङ्गस्य वर्णनमपि आगतम्। तद्यथा–

**भारतमागतश्चीनो ह्वेनसाङ्गोऽलिखन्नरः।
बोधिवृक्षं प्रशंसञ्ज्ञः सोऽद्वितीयो महाद्रुमः॥

प्रतिष्ठितं हि विश्वस्य शीर्षेऽतिपावनं मतम्।
मध्ये पृथ्वी च मूलस्तु नद्धमरेण पारजा॥

सर्जनं भद्रकल्पे हि सृष्ट्यादौ ह्यभिजायते।
ध्रुवं महीधरं तद्धि वज्रासनं प्रजायते॥

लिलेख ह्वेनसाङ्गस्तु यात्रिकश्चीनको वरः।
महिमानं महिष्ठं वै द्रुमेन्द्रस्य सुशोभनम्॥**[9]

सार्धमिव कविः महावृक्षं इतिहासकेन्द्ररूपेणापि ग्रन्थेऽस्मिन् प्रतिपादयति। तद्यथा–

**भव्यं वृत्तं द्रुमेन्द्रस्य विद्यते गाऽरवान्वितम्।
इतिहासस्य केन्द्रं हि यन्मानितं सुपूजितम्॥**

अनेन सहैव अशोकोपाख्यानमपि ग्रन्थेऽस्मिन् प्राप्यते। वस्तुतः प्रियदर्शिनः महाराजस्य अशोकस्य विषये संस्कृते साहित्यसामग्री अतीव अल्पीयसी एव विद्यते। तादृशस्य महतो राज्ञः विषये संस्कृतेन साहित्यस्य अप्रणयनं नूनं संस्कृतज्ञानां कृते संस्कृतस्य च कृते दुर्भाग्यस्य विषयः। अस्तु नाम, प्रसन्नतायाः अयं विषयः यत् अस्मिन् काव्ये तस्य विश्वसम्राजः अशोकस्य विषये पर्याप्ता साहित्यिकी सामग्री समुपलभ्यते। तद्यथा–

**बोधिप्राप्तिनिमित्तेनाशोकेन हि विहारकः।
ज्ञानोदयस्मृतौ पश्चात् कारितोऽभूतपूर्वकः॥**

7. महाबोधिद्रुमविजयम्1.12
8. महाबोधिद्रुमविजयम्1.17
9. महाबोधिद्रुमविजयम्-1.74-1.76, 1.79

**नराधिपो निराशस्सन् संग्रामके कलिङ्गके।**
**स्वीचकार स सद्धर्मं शान्तिदं करुणाकरम्॥**[10]

अग्रे च महाबोधिद्रुमं प्रति सम्राजः अशोकस्य प्रीतिः अपि प्रस्तुता वर्तते ग्रन्थे। महाबोधिद्रुमस्य स्मृतौ सम्राजा अशोकेन प्रथमतया महाविहारः संस्थापितः आसीत्। अयं च विहारः अत्यन्तं भव्यतया निर्मितमासीत्। अशोकानन्तरमपि नैके राजानः महाबोधिद्रुमं प्रति प्रीतिं स्थापितवन्तः। महाबोधिविहारस्य भव्यताम् इतोऽपि वर्धितवन्तश्चेति। एवम्प्रकारेण अस्मिन् ग्रन्थे महाबोधिद्रुमस्य विषये ऐतिहासिकानि तथ्यानि समुपलभ्यन्ते।

यथा पूर्वमेव उल्लिखितं यत् अस्मिन् महाबोधिद्रुमविजयकाव्ये भागद्वयं वर्तत इति। तत्र ग्रन्थस्याध्ययनेन ज्ञायते यत् प्रथमे भागे बोधिवृक्षस्य उत्कर्षकालस्य तथा च द्वितीयभागे बोधिद्रुमविध्वंसस्य च वर्णनं प्राप्यते। अतः प्रथमो भागः उत्कर्षो भागः तथा च द्वितीयो भाग अपकर्षो भागः कथयितुं शक्यते।

कविमतानुसारेण–

**बौद्धपर्यटकाभावात्काननातद्विपुलात्ततः।**
**आक्रमणाच्च शैवानां विहारोऽधोगतिं गतः॥**[11]

इत्येवं ज्ञायते यत् कालान्तरेण पर्यटकानाम् अभावे सति विपुलकानने कोऽपि न आगच्छति स्म। तदा केचन शैवानुयायिनः गिरि-सम्प्रदायिनः अत्र आगत्य स्वीयम् आधिपत्यं स्थापितवन्तः। एवम्प्रकारेण शनैः शनैः अयं महाविहारः दुरावस्थां प्राप्तः।

ग्रन्थाध्ययनेन ज्ञायते यत् अयं महाबोधिद्रुमः नैकधा विविधेभ्यः कारणेभ्यः नाशितः। कश्चित् राजा शशाङ्कः एतं महावृक्षं कर्तयित्वा अस्मिन् अग्निं संस्थाप्य ज्वालितवान्। अनन्तरं सम्राजोऽशोकस्य पुत्र्या संघमित्रया श्रीलङ्कादेशे रोपितस्य शाखाम् आनीय पुनः सः रोपितः। कालान्तरेण बख्तियारखिलजी इति दुष्टः शासकः पुनरपि एतं नाशितवान्। पुनरपि अयं वृक्षः दूरदेशात् आनीय रोपितः स च वृद्धिंगतः, प्रकृतिप्रकोपात् स च वृक्षः नष्टः। पुनः श्रावस्तीतः आनन्दबोधिवृक्षस्य शाखा अत्र आनीय रोपिता अभवत्। स च वृक्षः साम्प्रतं बोधगयायां विराजते। सम्पूर्णस्यापि विश्वस्य श्रद्धाभाग्वर्तते इति।

महाबोधिद्रुमस्य वर्णने प्रणीतेऽस्मिन् ग्रन्थे अनागारिक-धर्मपालेन महाबोधि सोसाइटी ऑफ इण्डिया इत्यस्याः संस्थायाः स्थापना कृता आसीद् इत्यस्मिन् विषयेऽपि अत्र वर्णनं प्राप्यते। एतस्याः संस्थायाः माध्यमेन श्रीलङ्कास्थः महान् बुद्धानुयायी अनागारिकः धर्मपालः महाबोधि-विहारस्य संरक्षणार्थं प्रायतत्। तद्यथा–

**संस्थापयन्महाबोधिं संस्थां विहाररक्षणे।**
**पत्रिकां च महाबोधिं प्रकाशयत्प्रचारणे॥**

**अधिकारस्तु बौद्धानां विहारे स्याद् दृढस्सदा।**
**जातः पाटलिपुत्रे हि सभायां निर्णयो महान्॥**[12]

अनेन वर्णनेनास्य केन्द्रस्य रक्षणाय कानि कार्याणि कथञ्चाभवन् इत्येत्सर्वं स्पष्टं भवति। पश्चात् च काव्ये, आतङ्कवादिनाम् आक्रमणात्परं कथं ब्रह्मदेशवासिनः महाबोधिविहारस्य उपरिभागं सुवर्णमयं कृतवन्तः इति वर्णितमस्ति।

10. महाबोधिद्रुमविजयम्2.93-2.94
11. महाबोधिद्रुमविजयम्2.27
12. महाबोधिद्रुमविजयम्2.102,2.103



अस्मिन् काव्ये आंग्लविदुषां प्रशंसा अपि कृता दृश्यते कविना केषुचित् प्रसङ्गेषु। वस्तुतः कैश्चित् सहृदयैः आंग्लैः अस्य देशस्य गौरवः वर्धितः। तेषु कनिंघमः प्रमुखो वर्तते। काव्ये कनिंघमोपाख्यानम् एतस्मिन् विषये एव वर्तते। कनिंघमस्य विषये काव्ये एवं प्रकारेण वर्णितं दृश्यते–

**सैन्यमुख्यः पुरातत्त्वे दक्षः कनिंघमः परम्।**
**दशामालोक्य तस्याऽऽख्यां प्रैषयत्स सुधीः पुनः॥**

**प्राच्येतिहासविज्ञाता पुरातत्त्वस्य शोधकः।**
**श्रमाधिक्येन मालीवापोषयद्देशसम्पदम्॥**

**कल्पमूर्तिः पुरातत्त्वे पुराविदां प्रतिष्ठितः।**
**कार्यसङ्कल्पशीलश्च कार्यपरो विचक्षणः॥**

**पुरातत्त्वस्य संस्थाया निदेशको गयापुरम्।**
**प्राप्याऽऽख्यां वज्रशब्दैर्हि लिलेख मठतारकीम्॥**

नूनं तात्कालिक सैन्यप्रमुख पुरातत्त्वविषये च दक्षताप्राप्तः कनिंघम-नामकः आंग्लविद्वान् भारतदेशस्य संस्कृतिरक्षायै बहु प्रयत्नान् अकरोत्। सः भारतीयसंस्कृतेः रक्षां माली इव अकरोत्।

अन्ते च महाबोधि-प्रणामना-सत्फलं कथितं वर्तते कविना। तद्यथा–

**महाबोधिं जनः कश्चित्प्रणामं कुरुते यदि।**
**नूनं शान्तिं परां याति बुद्धिरायुश्च वर्धते॥**

ततश्च काव्याध्ययनफले कविना संसारस्य कृते मङ्गलकामना कृता दृश्यते। तद्यथा–

**ग्रन्थाधीत्या व्यथाः दूरे कार्यजातं च सिध्यतु।**
**स्फीतो भवतु संसारस्सुखितं तु महीतलम्॥**

सर्वान्ते, कविना एवं प्रकारेण उपसंहृतिः कृता–

**वन्दामि सुद्रुमवरं सुगतस्वरूपम्**
**मैत्रीबलेन सुखितोऽस्तु समग्रलोकः।**
**सर्वत्र यस्य गुरुता वियुनक्ति शान्तिं**
**सर्वे प्रयान्तु ससुखं करुणां विहारम्॥**

काव्यस्यास्य पुष्पिकायां ग्रन्थप्रणयनविषये स्पष्टा सूचना लभ्यते। तद्यथा–'प्रफुल्लगडपालेन विरचितं महाबोधिद्रुमविजयं स्वोपज्ञ-'सम्बोधि'-हिन्दीव्याख्योपेतं खण्डकाव्यं 07 अप्रैल, 2014 दिनाङ्के सम्राट्-अशोकजयन्त्युत्सवावसरे सम्पूर्णं परिसमाप्तम्' इति।

अत्रेदम् अवधेयं वर्तते यत् 17 सितम्बर, 2013 काव्यप्रणयनारम्भो जातः; 07 अप्रैल, 2014 दिनाङ्के च ग्रन्थः पूर्णतां गतः। इत्येवम् आहत्य 202 दिनेषु काव्यमिदं निर्मितमभवत्।

**महाबोधिद्रुमस्य समीक्षणम्–**

'महाबोधिद्रुमविजयम्' इत्यस्य ग्रन्थस्य शीर्षकं वर्तते। अत्र शब्दद्वयमस्ति 'महाबोधिद्रुम + विजयम्।' प्रथमशब्देन बोधिवृक्षस्य बोधः जायते, पुनः विजयं किमर्थं योजितमिति विचारणीयं भवेत्–

बहुवारं बोधिवृक्षस्योपरि आक्रमणमभवत्, विस्फोटोऽप्यजायत्, तथापि वृक्षोऽद्यापि स्थिरः दृश्यते, अत एव वृक्षस्य विजयगाथा अस्मिन् ग्रन्थे वर्णिता वर्तते। तद्यथा–

**प्रयासैः बहुभिस्तस्माद् बौद्धानां हस्तयोस्तदा।**
**समागच्छद् विहारं च यत्नानि फलितानि हि॥**[13]

अस्य भाषाशैली सरला सुबोधगम्या च वर्त्तते। हिन्दीभाषयापि श्लोकानां व्याख्यानमस्मिन् ग्रन्थे प्राप्यते। तत् सम्बोधि-व्याख्या-नाम्ना लिखिता दृश्यते काव्ये साक्षात्। हिन्दीभावार्थसन्दभे पश्यामश्चेत् मध्ये क्वचित् भिक्षुस्थाने भिक्खुपालिशब्दस्य वर्णनं प्राप्यते, अनेन अस्मिन् पालिभाषायाः प्रभावः साक्षात् दृष्टिगोचरं भवति कवेश्च पालिप्रेम स्पष्टं भवति।

यद्यपीदं काव्यमस्ति तदपि अस्मिन् कल्पना दृष्टिगोचरं न भवति। अस्मिन् यत्किमपि लिखितं तत्सर्वमैतिहासिकमस्ति। पुनश्च इतिहासेऽपि तादृशमेव विवरणं प्राप्यते, यादृशमस्मिन्नस्ति। अतः एतं काव्यं वास्तविककाव्यं यथार्थकाव्यं वा कथयितुं शक्यते। अत्र अस्य युवकवेः सृजनात्मकता आश्चर्यमुत्पादयति। केवलमेकस्य वृक्षस्य वर्णनं सम्पूर्णेऽपि काव्ये अद्भुतमस्ति।

परिशिष्टभागे शब्दकोशः, चतुर्विंशतिः बोधिवृक्षाः, महापदानसुत्तानुसारं बोधिवृक्षः, डाकटिकटमध्ये कुत्र कुत्र बोधिवृक्षः दृश्यते तस्य चित्राण्यपि प्रकाशितानि।

बौद्धधर्मस्य केन्द्रभूतबोधिवृक्षस्य कथां ग्रन्थोऽयं वक्ति। क्वचित् क्वचित् अस्य वृक्षस्य मानवीकरणमपि दृश्यते। वृक्षः एव साक्षात् स्वीयाम् अनुभूतिं प्रकटयति।

अतः ग्रन्थस्यास्यावदानमैतिहासिकमस्तीति मे विश्वासः।

**महाबोधिद्रुमस्य ऐतिहासिकसन्देशः**

**महाबोधिं जनः कश्चित्प्रमाणं कुरुते यदि।**
**नूनं शान्तिं परां याति बुद्धिरायुश्च वर्धते॥**

**ग्रन्थाधीत्य व्यथाः दूरे कार्यजातं च सिध्यतु।**
**स्फीतो भवतु संसारस्सुखितं तु महीतलम्॥**

**वन्दामि सुद्रुमवरं सुगतस्वरूपम्**
**मैत्रीबलेन सुखितोऽस्तु समग्रलोकः।**
**सर्वत्र यस्य गुरुता वियुनक्ति शान्तिं**
**सर्वे प्रयान्तु ससुखं करुणां विहारम्॥**[14]

**निष्कर्षः–**

निष्कर्षतया एवं वक्तुं शक्यते–

ग्रन्थोऽयं केवलं खण्डकाव्यमेव नास्ति, अपितु एतद् आजीवनं कृतस्य शोधकार्यस्य परिणामः दृश्यते। यादृशाणि युक्तियुक्तानि तथ्यानि शोधप्रबन्धे भवन्ति तादृशाणि अस्मिन् ग्रन्थेऽपि प्राप्यन्ते। अस्य ग्रन्थस्य विषयवस्तु यावत् उपयोगी वर्त्तते तावदेव भूमिकापि। एवं प्रकारेण यः बौद्धधर्मस्य विषये ज्ञातुं वाञ्छति सः एनं ग्रन्थं नूनमेव पठेत्। महाबोधिद्रुमस्य व्याजेन अस्मिन् काव्ये बौद्धधर्मस्य ऐतिहासिकः परिचयः दत्तः वर्तते। अतः पाठकाय ग्रन्थोऽयं नूनम् अयं ग्रन्थः ज्ञानलाभं प्रापयिष्यतीति मुक्तिप्रदश्च भविष्यतीति मे दृढः विश्वासः।

13. महाबोधिद्रुमविजयम्2.111
14. महाबोधिद्रुमविजयम्2.137-2.139



## सन्दर्भग्रन्थाः


1. डॉ. गडपालः प्रफुलः, महाबोधिद्रुमविजयम्, सम्यकप्रकाशनम्, नवदेहली, 2014
2. भारतदर्पण, आकाश पब्लिशिंग हाऊस, विजय नगर जालन्धर रोड, रोहतक
3. सिंह कुमार सुनील, सामान्य ज्ञान, लूस.ट पब्लिकेशन, न्यू बाई पास रोड, अशोचक्र पटना (विहार) दसवां प्रकाशन, 2016
4. पाण्डे मनोहर, सामान्य ज्ञान, अरिहन्त प्रकाशन (रामछाया) 4577/15, अग्रवाल रोड, दरियागंज, नई दिल्ली, 2016

# 25

# आधुनिकसंस्कृतसाहित्ये बोधिसत्त्वनाटकस्य वैशिष्ट्यं महत्त्वं च

**हरीशमोहनः**
साहित्याचार्ये प्रथमवर्षीयच्छात्रः
श्रीरघुनाथकीर्तिपरिसरः,
देवप्रयागः (उत्तराखण्डः)

संस्कृतसाहित्ये वैदिकयुगात् नाटकानां प्रणयनपरम्पराप्रवाहः दृश्यते। नाटक-शब्दोऽयं 'नट्'-धातोः निष्पन्नो वर्तते। अस्य नाटकशब्दस्य अपरपर्यायो शब्दो वर्तते–नाट्यमिति। नाटकस्य अन्ये केचन इमे अर्थाः अपि सन्ति–नृत्यम्, अभिनयः, अनुकरणञ्चेति। लोके विद्यमानानाम् इतिवृत्तानां घटनानां वा चित्रणमेव नाटकं नाट्यं वा। नाट्यं नाम दृश्यं काव्यम्। श्रोत्रेण चक्षुसा च यद् आश्वदयितुं शक्यते तन्नाट्यम्। नाम वयं नाटकं दृष्टुं शक्नुमः श्रोतुं चापि शक्नुम इति। अत एव संस्कृतसाहित्ये नाट्यसाहित्यम् अतीव प्रसिद्धं वर्तते।

'नाटकान्तं हि साहित्यम्' इति लोके प्रसिद्धिः। महाकविना कालिदासेनापि उक्तम्–'नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्।' नाटकं रूपकस्य एका विधा वर्तते। संस्कृतसाहित्ये रूपकाणि दश सन्ति, अथ च अष्टादश उपरूपकाणि वर्तन्ते।

**संस्कृतसाहित्ये नाटकस्य महत्त्वम्–**

नाटकं साहित्यस्य महत्त्वपूर्णमङ्गं वर्तते। येन प्रकारेण चित्रस्य भिन्नवर्णाः सहृदयस्य चित्ते वर्णस्य आनन्दस्य चानुभूतिं कारयन्ति; तेनैव प्रकारेण नाटके प्रयुक्तनायकादीनां वेशभूषा-नेपथ्य-अभिनयादयः दर्शकस्य हृदये विशिष्टं प्रभावम् उत्पादयन्ति आनन्दसृष्टिञ्च कुर्वन्ति। ज्ञानार्थं लोके तादृशं किमपि ज्ञानं, शिल्पं, विद्या, कला, योगः वा नास्ति, यन्नाटके न दृश्यते।

भरतमुनिनापि प्रोक्तं स्व-नाट्यशास्त्रे–

**न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।**
**नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते॥**

अर्थात् संस्कृतसाहित्ये नाटकस्य स्थानम् अद्वितीयं अस्ति। प्राचीनकाले वेदेभ्यः आरभ्य एव नाटकानां परम्परा वर्तते। अनन्तरं लौकिकसंस्कृते तु नैकानि रम्यानि नाटकानि रचितानि अभूवन्। भास-कालिदास-भवभूति-हर्षादीनां नाटकानि तु अत्यन्तं प्रसिद्धानि वर्तन्ते। नाट्यप्रणयनस्य सा परम्परा



अद्यापि जीवति। आधुनिकसंस्कृतसाहित्ये नैकानि नाटकानि प्रणीतानि अभूवन्। अधुना वयं आधुनिक-संस्कृतसाहित्ये संस्कृत-पालि-मराठी-गुजराती-जर्मन-आंग्लादिभाषाणां महता पण्डितेन विश्वप्रसिद्धेन अनुसन्धात्रा धर्मानन्द-दामोदर-कोसम्बिना मराठीभाषायां प्रणीतस्य संस्कृतेन च अनूदितस्य 'बोधिसत्त्व'-नाटकस्य विषये विमर्शम् उपस्थापयामः।

**आधुनिकसंस्कृतसाहित्ये बोधिसत्त्वनाटकस्य प्रतिपाद्यं महत्त्वं च–**

आधुनिकसंस्कृतसाहित्ये प्रभुततया काव्यानि विरचितानि अभवन्। एषु काव्येषु अपि नाट्यसाहित्यं विशेषम् उल्लेखम् अर्हति। जानन्ति एव विद्वांसः यत् आधुनिकसंस्कृतसाहित्याकाशे बौद्धसाहित्यं प्रामुख्येन विलसति। अत्र अस्मिन् बौद्धसाहित्येऽपि मराठीभाषातः संस्कृतेन अनूदितं 'बोधिसत्त्वनाटकं' विशेषं स्थानं प्राप्नोति। एतं बोधिसत्त्वनाटकम् आचार्यो धम्मानन्ददामोदरकोसम्बिवर्यः मूलतः मराठीभाषायाम् अरचयत्। अस्य महत्त्वपूर्णस्य नाटकस्य संस्कृतानुवादं युवविद्वान् डॉ. प्रफुल्लगडपालः अकरोत्।

अत्र 'बोधिसत्त्वः' इति पदं वर्तते। इदं ज्ञेयं वर्तते यत् 'बोधिः' नाम सम्पूर्णं ज्ञानम्। एतस्य ज्ञानस्य प्राप्त्यै अविश्रान्ततया प्रयत्नशीलः सत्त्वः 'बोधिसत्त्वः' इति कथ्यते। अत्र सत्त्वः नाम प्राणी। यथोक्तं पूर्वं यत् बोधिसत्त्वनाटकस्य रचयिता आचार्यः धम्मानन्द-दामोदर-कोसम्बी अस्ति। मूल-त्रिपिटक-साहित्यस्य संस्कृतवाङ्मयस्य च अध्ययनं विधाय अनेन विदुषा आधुनिकयुगे बौद्धसाहित्ये अद्वितीयं स्थानं प्राप्तम्। कोसम्बिमहोदयः बौद्धसाहित्यस्य अवगाहनं कृत्वा तस्य स्थापनां कर्तुम् आधुनिकयुगे भारतवर्षे प्रथमः एव आचार्यः आसीत्। नूनम् अनेन कारणेन सोऽयं आचार्यः धम्मानन्दकोसम्बी समस्तस्य विद्वत्समाजस्य श्रद्धाभाग्वर्तते। बौद्धसाहित्यस्य अध्ययनेन अभिभूतः सः ऐतिहासिकमहापुरुषस्य सिद्धार्थगौतमबुद्धस्य वास्तविकस्वरूपं ख्यापयितुं नैकान् ग्रन्थान् अरचयत्। एषु ग्रन्थेषु तस्य गभीरा अधीतिः, विवेकवादः, इतिहासबोधः च स्पष्टतया संलक्ष्यते।

आचार्यस्य धर्मानन्दकोसम्बिनः काले पुराणेषु वर्णितं बुद्धचरितं सर्वत्र प्रसिद्धम् आसीत्। तस्मिन् काले सः श्रीलङ्कादेशं गत्वा तत्र तिपिटकस्य अध्ययनम् अनुसन्धानं चाकरोत्। अनेन तस्मिन् विवेकवादस्य बीजः प्रस्फुटितः। ततः सः गौतमं बुद्धं कथमपि कदापि च पौराणिकबुद्धत्वेन नैव स्वीकरोति स्म। सः सम्यक् विचिन्त्य भगवतो बुद्धस्य शिक्षाः अंगीकृतवान्। यदा तदा सः बुद्धजीवनीं पठति स्म, तदा तदा तन्मनसि विचारः आगच्छति स्म यत् कथं वा कश्चित् राजकुमार 29 वर्षाणि यावत् जीवनस्य अवश्यम्भाविघटनाः अपि ज्ञातुं न क्षमो जातः। एतदर्थं सः नैकान् अनुसन्धानयुतान् ग्रन्थान् अरचयत्। ग्रन्थप्रणयनेनापि यदा तस्य पिपासा न शान्ता तदा सः एकं नाटकं रचयितुं विवशीभूतो जातः। ततश्च सः बोधिसत्त्व इति नाटकस्य रचनां मराठीभाषया अकरोत्।

राजकुमारः सिद्धार्थगौतमः वृद्ध-रुग्ण-शव-संन्यासिनः संवीक्ष्य रात्रौ गृहत्यागम् अकरोत् इति घटनां काल्पनिकीं प्रक्षिप्तां वा मत्वा सः त्रिपिटकसम्मतां घटनाम् अनेन नाटकमाध्यमेन उपस्थापयत्। आचार्यः धर्मानन्दकोसम्बी मनुते स्म यत् 'शाक्यकोलियराज्ययोर्मध्ये प्रवाहितायाः रोहिणीनद्याः जलविवाद एव सिद्धार्थाभिनिष्क्रमणस्य ऐतिहासिकं कारणं आसीत्' इति। एतां घटनां सः बहुभिः प्रमाणैः पर्यपुष्यत् अपि। त्रिपिटकस्य-प्रमाणैः परिपुष्टा इयं घटना इतोऽपि स्पष्टतया उपस्थापयितुं खलु सः 'बोधिसत्त्वः' इति चतुः अङ्कात्मकं लघुनाटकं व्यरचयत्।

अस्मिन् चतुःअङ्कात्मके नाटके बोधिसत्त्वः सिद्धार्थः युद्ध-विरोधित्वेन उपस्थापितः। शाक्य-कोलिययोः राज्ययोर्मध्ये रोहिणीनाम्नी नदी प्रवहति स्म। प्रतिवर्षं उभयोः राज्ययोः कृषकाः अस्याः नद्याः जलं क्रमेण स्वीकुरुतः स्म। एकस्मिन् वर्षे नद्याः जलस्य उपयोगः कृषिसिञ्चनार्थं शाक्यदेशीयाः कुर्वन्ति स्म, अपरस्मिन्

च वर्षे कोलियाः नदीजलं स्व-कृषिक्षेत्रं सिञ्चयितुं कुर्वन्ति स्म। नाटकस्य कथावस्तुनः अनुसारेण राजकुमारः सिद्धार्थः यदा 29 वर्षदेशीयो जातः, तदा नदीजलं स्वीकर्तुं शाक्यकोलिययोः श्रमिकेषु विवादो जातः। स च विवादः बहु वर्धितः। श्रमिकाणाम् अयं विवादः राजकीयो विवादः सञ्जातः। शाक्याः कोलियाः च युद्धार्थं सिद्धाः अभूवन्। अत्र दृष्टव्यं वर्तते यत् जलसमस्याकारणेन तस्मिन् कालेऽपि विवादो जातः आसीदिति।

अनन्तरम् अयं विवादः वर्धितः देशे युद्धस्थितिश्च आगता। सिद्धार्थः तदा शाक्यानां संघस्य सदस्यः आसीत्। सः शाक्यानां परिषदि युद्धस्य विरोधं कृतवान्। अनेन परिषदः सदस्याः रुष्टाः अभूवन्। सर्वैः च संघविरुधगतिविधिकारणेन सः संघात् निष्कासितः; देशत्यागस्य दण्डश्च तत्कृते निश्चितः। एवं राजकुमारः सिद्धार्थः गृहत्यागम् अकरोत्।

वस्तुतः इयं घटना तथा अलङ्कारपूर्णा काल्पनिकी च न दृश्यते; अपितु इयं दृश्यते वास्तविकतापूर्णा। बौद्धधर्मे कल्पनायाः कृते बहु महत्त्वं न दीयते, अत्र प्रतिक्षणं वास्तविकतायाः एव दर्शनं क्रियते। अस्मिन् क्षणे यज्जायमानं वर्तते, तस्य ज्ञानं बुद्धशिक्षायां बहु महत्त्वम् अर्हति। तदनुसारेण बोधिसत्त्वनाटकस्य विषयवस्तु नूनम् अतीव महत्त्वपूर्णं वर्तते।

अत्र इदमपि वक्तव्यं यत् कोसम्बिवर्येण उपस्थापिता इयं घटना विश्वस्मिन्नपि विश्वे अत्यन्तं सम्मानिता स्वीकृता च जाता, तथापि इदं 'बोधिसत्त्व'-नाटकं साहित्यदृष्ट्या नाटकत्वं नार्हेत्, चेदपि इतिहासदृष्ट्या अस्य अतीव महत्त्वं वर्तते।

सुदृढैः ऐतिहासिकैः प्रमाणैः तथ्यैश्च विना येन एकं वाक्यमपि लेखनीयमिति वृत्वा आजन्म वक्तव्यस्य लेखनस्य च कार्यमनेन कृतम्। तेनैव कालान्तरेण गौतमबुद्धस्य गृहत्यागस्य प्रव्रज्यास्वीकारस्य च नूतना सयुक्तिकी च उपपत्तिः विचारिता, किन्तु तस्याः उपपत्याः सत्यतायाः तथ्यतायाश्च पर्याप्तं कारणं लब्धेऽपि यदा सा उपपत्तिः अपूर्णा इव आभासते स्मः तदा सः अन्यत् किं वा कुर्यात? अन्ततोगत्वा तेन स्वीया उपपत्तिः नाटकरूपेण प्रस्तुत्य एव सन्तोषः प्राप्तः। नाटकेऽस्मिन् अस्याः उपपतयाः अनन्तरमेव बुद्धस्य उपदेशाः समधिकम् उतमतया वास्तविकतया च अवगन्तुं शक्यन्ते। एतस्य पुरातनं बुद्धचरितं वस्तुतः ऐतिहासिकं सदपि एकं सरसं नाटकमेव अस्ति। अस्य नाटकस्य प्रत्येकं दृश्ये बुद्धकालीनस्य सामाजिकजीवनस्य चित्रणमस्ति। अत एव बुद्धकालीनस्येतिहासम् अवगन्तुं नाटकमिदम् अतीवोपयोगी वर्तते।

नाटकस्थ-संवादाः अतीव प्रवाहपूर्णा प्रभावपूर्णाश्च वर्तन्ते। एकस्मिन् दृश्ये नायको राजकुमारः सिद्धार्थः कथयति–

'कस्मिन्नपि काले अयं सनातनो धर्मो भवितुमेव नार्हति। ब्राह्मणेषु द्रोणसदृशाः योद्धारो जाताः। अद्यापि तादृशाः योद्धारः सन्ति एव ब्राह्मणेषु। क्षत्रियेषु जनकसदृशा ब्रह्मज्ञानिनो जाताः।साम्प्रतमपि सन्ति तादृशाः क्षत्रियाः ज्ञानिनः। महर्षिव्यासः धीवरीपुत्रः आसीत्। तस्य पिता अस्पृश्य एव खलु आसीत्। तर्हि अस्पृश्योपि सः महर्षिपदम् आप्तवान्। मातङ्गर्षिः चाण्डालः आसीत्। अर्थात अद्यत्वे प्रसारितस्य जातिभेदस्य सः कश्चन अङ्गः आसीत्। तर्हि अयं कथं वा सनातनो धर्मो भवितुमर्हति?

वैरः वैरेण न शमति। अवैरेण एव वैरः शान्तो भवति। अयमेव खलु वस्तुतः सनातनो धर्मः।' इति।

एवम्प्रकारेण एतादृशेषु संवादेषु बौद्धधर्मस्य वास्तविक-सन्देशः वर्तते। अतः कथयितुं शक्यते यत् अनेन प्रकारेण अस्मिन् नाटके उपस्थापिताः विचाराः समाज-परिष्काराय एकं विशिष्टं सन्देशं प्रयच्छन्ति इति।

# 26

# बुद्धोदयकाव्यम् : एक अध्ययन

**डॉ. प्रियंका घिल्डियाल**
अतिथि प्रवक्ता, हिन्दी विभाग
हे.न.ब.गु. केन्द्रीय वि.वि. श्रीनगर, गढ़वाल (उत्तराखण्ड)
मोबा.-86501 26408
e-mail-ghildiyalpriyanka@rocketmail.com

'बुद्धोदयकाव्यम्' सुगत कविरत्न शान्तिभिक्षु शास्त्री द्वारा रचित एक भक्तिरसात्मक गीतिकाव्य है। यह दस प्रसंगों में गुम्फित काव्य है। इस काव्य में जो विभाग किया गया है, उसे प्रसंग की आख्या दी गई है। इन प्रसंगों का विभाजन तथा प्रबन्धन अत्यन्त सुनियोजित तरीके से किया गया। इसमें प्रत्येक प्रसंग में दस शार्दूलविक्रीडित पद्य तथा तीन गेयपद है। यह ग्रन्थ भगवान् बुद्ध के अवतीर्ण होने से प्रारम्भ होता है तथा बोधिलाभ एवं धर्मदेशना पर परिसमाप्त हो जाता है।

संस्कृत-साहित्य में भगवान् बुद्ध के जीवन-चरित पर बुद्धचरित, ललितविस्तर सदृश कुछ काव्य लिखे जा चुके हैं, किन्तु इसमें भगवज्जीवन पर एक बहुत छोटे गीतिकाव्य का अभाव था। इस काव्य के रचयिता के अनुसार यह दुःख का विषय था तथा उन्हें खल रहा था। गीत-गोविन्द के पाठक सिंहल बौद्धों की यह उत्कट इच्छा थी कि तथागत के जीवन पर भी कुछ पद्य एवं गेयपद पढ़ने को मिलें। उन्हीं की इच्छा तथा सत्प्रेरणा से शान्तिभिक्षु शास्त्री जी द्वारा प्रस्तुत काव्य का प्रणयन किया गया। इस ग्रन्थ की रचना के विषय में शास्त्री जी ने बुद्धविजय-महाकाव्य में अपने अनुभव साझा किये हैं।

बुद्धोदय-काव्य का उल्लेख 'बुद्धविजय-काव्यम्' में यो हुआ है–

**"बुद्धोदयं मया गीतं स्वल्पग्रन्थं मनोरमम्।**
**तथाप्यतृप्तं चितं में नित्यं बुद्धपरायणम्॥"[1]**

ललितपदावली, कवि-कल्पना की उड़ान, अलंकारों की छठा, काव्यरस का अनुपम परिपाक आदि कुछ ऐसे पक्ष हैं, जिनके कारण यह काव्य संस्कृत के प्रायः सभी गीति-काव्यों को बहुत पीछे छोड़ देता है। भगवान् बुद्ध के प्रति भक्ति के दर्शन इस काव्य में किये जा सकते हैं। वस्तुतः भक्तिरस के चित्रण में महाकवि शान्तिभिक्षु बेजोड़ हैं।

1. श्लोक, सर्ग-14, बुद्धविजय काव्य।

